# चम्पूरामायणे

# बालकाण्डम्

०५ – २७.११.२०१७

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# पुनरावर्तनम्

- तदनु समयोचितकृत्यं – वाल्मीकिः आश्रमं प्रतिगच्छति
- वाणीविलासम् – ब्रह्मा वाल्मीकेः पुरतः आविर्भवति
- ततः परमहर्षेण महर्षिणा – वाल्मीकिना सत्कृतः ब्रह्मा छन्दोबद्धैः वचनैः रामायणं रचयितुं तम् आदिशति
- अथ सरसिजयोनेः – ब्रह्मणः वरेण रामचरितं योगदृष्ट्या वीक्ष्य वाल्मीकिः शुभं स्वादु रामायणाख्यं काव्यं रचयति

# एनं प्रबन्धं प्रयोक्तुं कः समर्थ इति चिन्तामुपगतवति सति भगवति वाल्मीकौ

- एनम्, प्रबन्धम्, प्रयोक्तुम्, कः, समर्थः, इति, चिन्ताम्, उपगतवति, सति, भगवति, वाल्मीकौ
- एनं प्रबन्धम् = रामायणकाव्यम्
- प्रयोक्तुम् = पठितुं गातुं वा
- कः समर्थः = कः अधिकारी
- इति - एवंरूपतया

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Vikas...

# एनं प्रबन्धं प्रयोक्तुं कः समर्थ इति चिन्तामुपगतवति सति भगवति वाल्मीकौ

- चिन्ताम् = पर्यालोचनम्
- उपगतवति सति = प्राप्तवति सति
- भगवति वाल्मीकौ = पूज्ये प्राचेतसे
- तात्पर्यम् – रामायणं विरचय्य वाल्मीकिः तत् काव्यं सम्यगधीत्य अन्येभ्यः प्रसारयितुं कः शक्नुयात् इति चिन्तयति । तदा...

# एनं प्रबन्धं प्रयोक्तुं कः समर्थ इति चिन्तामुपगतवति सति भगवति वाल्मीकौ

- एनम् – इदम्/एतद् शब्दः, २.१ । अन्वादेशे 'द्वितीयाटौस्स्वेनः' (२.४.३४) । एतम्/एनम्, इमम्/एनम् ।
- सतिसप्तमीप्रयोगः

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

उपागतौ मिलितपरस्परोपमौ
बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ
कुशीलवौ कुशलवनामधारिणौ ॥९॥

- लव-कुशयोः वर्णनम् ।
- उपागतौ, मिलित-परस्पर-उपमौ, बहु-श्रुतौ, श्रुति-मधुर-स्वर-अन्वितौ, विचक्षणौ, विविध-नरेन्द्र-लक्षणौ, कुशीलवौ, कुश-लव-नाम-धारिणौ

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- उपागतौ = समीपं प्राप्तौ
- कौ उपागतौ? कुशीलवौ = चारणौ, गायकौ
- कीदृशौ कुशीलवौ? मिलितपरस्परोपमौ, बहुश्रुतौ, श्रुतिमधुरस्वरान्वितौ, विचक्षणौ, विविधनरेन्द्रलक्षणौ, कुशलवनामधारिणौ

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
# विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- मिलितपरस्परोपमौ - मिलिता = सङ्गता, परस्परयोः = अन्योन्ययोः, उपमा = सादृश्यम् ययोः । अन्योन्यसदृशौ, यमलत्वात् परस्पर-तुल्यरूपौ
- बहुश्रुतौ = वेदवेदाङ्गादि-सकलविद्या-विशारदौ
- श्रुतिमधुरस्वरान्वितौ – श्रुतिमधुरेण = श्रवणानन्दकरेण, स्वरेण = श्रुत्या, अन्वितौ = सहितौ

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- विचक्षणौ = धीमन्तौ
- विविधनरेन्द्रलक्षणौ – विविधानि = बहुप्रकाराणि, नरेन्द्रलक्षणानि = राजचिह्नानि ययोः
- कुशलवनामधारिणौ = कुशः, लवः चेति संज्ञातौ

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
# विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- अन्वयः – मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ विचक्षणौ विविधनरेन्द्रलक्षणौ कुशलवनामधारिणौ कुशीलवौ उपागतौ ।
- तात्पर्यम् – यदा वाल्मीकिः चिन्तयन् आसीत्, तदैव अन्योन्यसदृशौ, सकलविद्याविशारदौ, श्राव्यकण्ठस्वरसम्पन्नौ, धीमन्तौ, बहुप्रकारकराजचिह्नयुक्तौ कुश-लवनामकौ गायकौ तत्समीपं प्राप्तौ ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- उपागतौ – उप + आ + गम्लृ गतौ + क्त (कृत्), पुं, १.२
- मिलितपरस्परोपमौ – परस्परयोः उपमा, मिलिता परस्परोपमा ययोः तौ
- बहुश्रुतौ – बहु श्रुतं याभ्यां तौ
- श्रुतिमधुरस्वरान्वितौ – श्रुतेः मधुरः, श्रुतिमधुरः स्वरः, श्रुतिमधुरस्वरेण अन्वितौ

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- विचक्षणौ – 'धीमान् सूरिः कृती कृष्टिः लब्धवर्णो विचक्षणः' (अमरः)
- विविधनरेन्द्रलक्षणौ – नरेन्द्रस्य लक्षणम्, विविधानि नरेन्द्रलक्षणानि ययोः तौ
- कुशीलवौ – 'चारणास्तु कुशीलवाः' (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- कुशलवनामधारिणौ – कुशश्च लवश्च, कुशलवौ इति नामनी, कुशलवनामनी धरतः । नकारान्तः, पुं, १.२ ।
- "स तौ कुशलवोन्मृष्ट-गर्भक्लेदौ तदाख्यया । कविः कुशलवावेव चकार किल नामतः" (रघुवंशम् १५.३२)
- 'अस्त्री कुशं कुथो दर्भः' (अमरः), लवः = गोपुच्छलोम ।

# उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
# विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः । अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥

(बाल ४.४)

- तौ तु गान्धर्व-तत्त्वज्ञौ स्थान-मूर्च्छनकोविदौ । भ्रातरौ स्वरसम्पन्नौ गन्धर्वा इव रूपिणौ ॥
- रूपलक्षणसम्पन्नौ मधुरस्वरभाषिणौ । बिम्बादिवोत्थितौ बिम्बौ रामदेहात् तथापरौ ॥

(बाल ४.१०, ४.११)

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# उपागतौ मिलितपरस्परोपमौ बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
# विचक्षणौ विविधनरेन्द्रलक्षणौ कुशीलवौ कुशलवनामधारिणौ ॥९॥

- ‘अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्’
- गुणः – उदात्तता । ‘श्लाघ्यैर्विशेषणैर्योगो यत्र सा स्याद् उदात्तता’
- वृत्तम् – रुचिरा । ‘चतुर्ग्रहैरिह रुचिरा जभस्जगा’ । प्रतिपादं १३ (४+९)

# एतौ मुनिः परिगृह्य स्वां कृतिमपाठयत् ।

- मुनिः = मननशीलः वाल्मीकिः
- एतौ = कुशलवौ
- परिगृह्य = शिष्यत्वेन स्वीकृत्य
- स्वां कृतिम् = आत्मना रचितं रामायणकाव्यम्
- अपाठयत् = अध्यापयामास

# एतौ मुनिः परिगृह्य स्वां कृतिमपाठयत् ।

- स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
- वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ (बाल ४.६)
- अपाठयत् – "पठ व्यक्तायां वाचि" + णिच् + लङ् प्रथम.१
- परिगृह्य – परि + "ग्रह उपादाने" + ल्यप् (कृत्) - अव्ययम्

# तौ पुनरितस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः परिवृतो निजचरितं गातुमन्वयुङ्क्त ।

- तौ, पुनः, इतस्ततः, गायमानौ, दृष्ट्वा, रामः, प्रहृष्ट-मनाः, स्व-भवनम्, आनीय, भ्रातृभिः, परिवृतः, निज-चरितम्, गातुम्, अन्वयुङ्क्त
- तौ = कुशलवौ
- इतस्ततः = तत्र तत्र प्रदेशेषु
- गायमानौ = गानरूपेण रामायणं पठन्तौ

तौ पुनरितस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः परिवृतो निजचरितं गातुमन्वयुङ्क्त ।

- दृष्ट्वा = वीक्ष्य
- रामः
- प्रहृष्टमनाः = तयोः गानमाधुर्येण सन्तुष्टान्तःकरणः
- स्वभवनम् = निजमन्दिरम्
- आनीय = भृत्यैः प्रापय्य

तौ पुनरितस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः परिवृतो निजचरितं गातुमन्वयुङ्क्त ।

- भ्रातृभिः = भरत-लक्ष्मण-शत्रुघ्नैः सहोदरैः
- परिवृतः = सहितः
- निजचरितम् = स्वचरित्रम्
- गातुम्
- अन्वयुङ्क्त = अपृच्छत्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# तौ पुनरितस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः परिवृतो निजचरितं गातुमन्वयुङ्क्त ।

- प्रशस्यमानौ सर्वत्र कदाचित् तत्र गायकौ । रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥
- स्ववेश्म चानीय ततो भ्रातरौ स कुशीलवौ । पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः ॥

(बाल ४.२४, २५)

- श्रूयतामिदमाख्यानम् अनयोः देववर्चसोः । विचित्रार्थपदं सम्यक् गायकौ समचोदयत् ॥

(बाल ४.३२)

तौ पुनरितस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः परिवृतो निजचरितं गातुमन्वयुङ्क्त ।

- गायमानौ – "गै शब्दे" + शानच् (कृत्) – पुं, २.२
- दृष्ट्वा – "दृशिर् प्रेक्षणे" + क्त्वा (कृत्) । अव्ययम् ।
- प्रहृष्टमनाः – प्रहृष्टं मनः यस्य सः । सकारान्तः, पुं, १.१
- स्वभवनम् – स्वस्य भवनम् / स्वं भवनम् । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' (अमरः)

vyoma
Samskritam - Value Education - Technology

# तौ पुनरितस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः परिवृतो निजचरितं गातुमन्वयुङ्क्त ।

- आनीय – आ+ “णीञ् प्रापणे” + ल्यप् (कृत्) – अव्ययम्
- भ्रातृभिः – ऋकारान्तः, पुं, ३.३
- परिवृतः – परि + वृ + क्त (कृत्) – पुं, १.१
- निजचरितम् – निजं चरितम्
- गातुम् – “गै शब्दे” + तुमुन् (कृत्) – अव्ययम्
- अन्वयुङ्क्त – अनु+ “युजिर् योगे” – लङ्, प्रथम.१ । ‘प्रश्नोऽनुयोगः पृच्छा च’ (अमरः)

ततश्च,

छन्दोमयीनां निलयस्य वाचाम्
अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम्
यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- ततः – तदनन्तरम् ।
- लवकुशाभ्यां रामायणगानम् आरभ्यते ।

छन्दोमयीनां निलयस्य वाचाम् अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम् यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- पदच्छेदः
- छन्दोमयीनाम्, निलयस्य, वाचाम्, अन्ते-वसन्तौ, मुनि-पुङ्गवस्य, एतौ, कुमारौ, रघु-वीर-वृत्तम्, यथा-क्रमम्, गातुम्, उपाक्रमेताम् ।

छन्दोमयीनां निलयस्य वाचाम् अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम् यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- उपाक्रमेताम् = आरब्धवन्तौ
- कौ उपाक्रमेताम्? एतौ कुमारौ = कुशलवौ
- कीदृशौ कुमारौ? अन्तेवसन्तौ = शिष्यौ
- कस्य अन्तेवसन्तौ? मुनिपुङ्गवस्य = मुनिश्रेष्ठस्य वाल्मीकेः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

छन्दोमयीनां निलयस्य वाचाम् अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम् यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- कीदृशस्य मुनिपुङ्गवस्य? छन्दोमयीनां वाचां निलयस्य = वृत्तबद्धानां वचनानां निकेतनस्य, पद्यकाव्यनिर्माणचतुरस्य
- किं कर्तुम् उपाक्रमेताम्? गातुम् = गानेन प्रस्तोतुम्
- किं गातुम्? रघुवीरवृत्तम् = श्रीरामस्य चरितम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

छन्दोमयीनां निलयस्य वाचाम् अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम् यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- कथं गातुम्? यथाक्रमम् = उपदेशानुसारेण
- अन्वयः – छन्दोमयीनां वाचां निलयस्य मुनिपुङ्गवस्य अन्तेवसन्तौ एतौ कुमारौ रघुवीरवृत्तं यथाक्रमं गातुम् उपाक्रमेताम् ।
- तात्पर्यम् – आदिकवेः वाल्मीकेः शिष्यौ लवकुशौ वाल्मीकिना उपदिष्टेनैव क्रमेण रामायणं गातुम् आरब्धवन्तौ ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

छन्दोमयीनां निलयस्य वाचाम् अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम् यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम् । वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ॥
- ऋषीणां च द्विजातीनां साधूनां च समागमे । यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥

(बाल ४.१२-१३)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

छन्दोमयीनां निलयस्य वाचाम्    अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम्    यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- उपाक्रमेताम् – उप + “क्रमु पादविक्षेपे” – लङ्, प्रथम.२
- गातुम् – “गै शब्दे” + तुमुन् (कृत्) – अव्ययम्
- वाचाम् – चकारान्तः, स्त्री, ६.३ । ‘गीर्वाग्वाणी सरस्वती’ (अमरः)
- अन्तेवसन्तौ – “वस निवासे”+ शतृ(कृत्) – तकारान्तः, पुं, १.२ । ‘छात्रान्तेवासिनौ शिष्ये’ (अमरः) ।

छन्दोमयीनां निलयस्य वाचाम् अन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तम् यथाक्रमं गातुमुपाक्रमेताम् ॥१०॥

- मुनिपुङ्गवस्य – मुनीनां पुङ्गवः, तस्य
- रघुवीरवृत्तम् – रघूणां वीरः, रघुवीरस्य वृत्तम्
- यथाक्रमम् – क्रमम् अनतिक्रम्य
- वृत्तम् – उपजातिः (इन्द्रवज्रा १,२,३ + उपेन्द्रवज्रा ४)

# सङ्क्षेपः

- एनं प्रबन्धं – वाल्मीकिः चिन्तयति
- उपागतौ – लवकुशयोः वर्णनम्
- एतौ मुनिः – वाल्मीकिना लवकुशयोः अध्यापनम्
- तौ पुनरितस्ततो – रामः लवकुशौ स्वभवनम् आनयति
- छन्दोमयीनां – लवकुशौ रामायणं गातुम् आरभेते






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in